॥ अथ पंचमी ॥

हुवे वातस्वनं कविं पर्जन्यक्रंद्यं सहः । अग्निं समुद्रवाससं ॥५॥

हुवे । वातऽस्वनं । कविं । पर्जन्यऽक्रंद्यं । सहः । अग्निं । समुद्रऽवाससं ॥५॥

वातस्वनं वातसदृशध्वनिं कविं क्रांतकर्माणं पर्जन्यक्रंद्यं पर्जन्यसदृशक्रंदनं सहः सहस्विनं वाडवमग्निं हुवे ह्वयामि । अन्यद्गतं ॥

॥ इति षष्ठस्य सप्तमे नवमो वर्गः ॥

॥ अथ षष्ठी ॥

आ सवं सवितुर्यथा भगस्येव भुजिं हुवे । अग्निं समुद्रवाससं ॥६॥

आ । सवं । सवितुः । यथा । भगस्यऽइव । भुजिं । हुवे । अग्निं । समुद्रऽवाससं ॥६॥

सवितुः प्रेरकस्य देवस्य सवं यथा प्रसवमिव भगस्येव भुजिं भगाख्यस्य देवस्य भोगमिव च समुद्रवाससमग्निं हुवे । आह्वयामि ॥

॥ अथ सप्तमी ॥

अग्निं वो वृधंतमध्वराणां पुरूतमं । अच्छा नप्त्रे सहस्वते ॥७॥

अग्निं । वः । वृधंतं । अध्वराणां । पुरुऽतमं । अच्छ । नप्त्रे । सहस्वते ॥७॥

अध्वराणामहिंस्यानां बलिनां नप्त्रे बंधुं सहस्वते बलवंतं ॥ विभक्तिव्यत्ययः ॥ वृधंतं ज्वालाभिर्वर्धमानं पुरूतममतिशयेन बहुमग्निमृत्विजो वो यूयमच्छ । अभिगच्छत ॥

॥ अथाष्टमी ॥

अयं यथा न आभुवत्त्वष्टा रूपेव तक्ष्या । अस्य क्रत्वा यशस्वतः ॥८॥

अयं । यथा । नः । आऽभुवत् । त्वष्टा । रूपाऽइव । तक्ष्या । अस्य । क्रत्वा । यशस्वतः ॥८॥

अयमग्निर्नोऽस्मान् तक्ष्या विकर्तव्यानि रूपेव त्वष्टा रूपाणि वर्धकिरिव यथा येन प्रकारेणाभुवत् आभवति तथैनमग्निमभिगच्छतेत्यर्थः । किंच वयमस्याग्नेः क्रत्वा प्रज्ञानेन युक्ता यशस्वतो यशस्वंतो भवेमेति शेषः ॥

॥ अथ नवमी ॥

अयं विश्वा अभि श्रियोऽग्निर्देवेषु पत्यते। आ वाजैरुप नो गमत् ॥९॥

अयं। विश्वाः। अभि। श्रियः। अग्निः। देवेषु। पत्यते। आ। वाजैः। उप। नः। गमत् ॥९॥

मनुष्याणां विश्वाः सर्वाः श्रियः संपदो देवेषु देवानां मध्ये योऽयमग्निरभिपत्यतेऽभिगच्छति सोऽग्निर्नोऽस्मानपि वाजैरन्नैरुपागमत्। उपागच्छतु ॥

॥ अथ दशमी ॥

विश्वेषामिह स्तुहि होतॄणां यशस्तमं। अग्निं यज्ञेषु पूर्व्यं ॥१०॥

विश्वेषां। इह। स्तुहि। होतॄणां। यशःऽतमं। अग्निं। यज्ञेषु। पूर्व्यं ॥१०॥

विश्वेषां सर्वेषां होतॄणां मध्ये यशस्तमं यशस्वितमं यज्ञेषु पूर्व्यं मुख्यमग्निमिहास्मदीये यज्ञे हे स्तोतः स्तुहि ॥

॥ इति षष्ठस्य सप्तमे दशमो वर्गः ॥

॥ अथैकादशी ॥

शीरं पावकशोचिषं ज्येष्ठो यो दमेष्वा। दीदाय दीर्घश्रुत्तमः ॥११॥

शीरं। पावकऽशोचिषं। ज्येष्ठः। यः। दमेषु। आ। दीदाय। दीर्घश्रुत्ऽतमः ॥११॥

ज्येष्ठो देवानां मुख्यो दीर्घश्रुत्तमोऽतिशयेन विद्वानग्निर्दमेषु यज्वनां गृहेष्वा दीदाय। आदीप्यते। तं शीरमनुशायिनं ॥ तथा च यास्कः। अनुशायिनमिति वाशिनामिति वा। नि० ४.१४.। इति ॥ पावकशोचिषं पावकदीप्तिं स्तुहीत्यर्थः ॥

॥ अथ द्वादशी ॥

तमर्वंतं न सानसिं गृणीहि विप्र शुष्मिणं। मित्रं न यातयज्जनं ॥१२॥

तं। अर्वंतं। न। सानसिं। गृणीहि। विप्र। शुष्मिणं। मित्रं। न। यातयत्ऽजनं ॥१२॥

हे विप्र मेधाविन् स्तोतः अर्वंतं नाश्वमिव सानसिं संभजनीयं शुष्मिणं बलिनं मित्रं न सखायमिव यातयज्जनं हतशत्रुजनं तमग्निं गृणीहि। स्तुहि ॥

॥ अथ त्रयोदशी ॥

उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः। वायोरनीके अस्थिरन् ॥१३॥

उप। त्वा। जामयः। गिरः। देदिशतीः। हविःऽकृतः। वायोः। अनीके। अस्थिरन् ॥१३॥

हे अग्ने हविष्कृतो यजमानार्थं गिरः स्तुतयो जामयः स्वसार इव देदिशतीस्तव गुणान्दिशंत्यस्त्वा त्वामुपतिष्ठंते । वायोरनीके समीपे त्वां समेधयंत्योऽस्थिरन् । अतिष्ठंश्च ॥

॥ अथ चतुर्दशी ॥

यस्यं त्रिधात्ववृंतं बर्हिस्तस्थावसंदिनं । आपश्चिन्नि दंधा पदं ॥१४॥

यस्यं । त्रिऽधातुं । अवृंतं । बर्हिः । तस्थौ । असंऽदिनं । आपः । चित् । नि । दध । पदं ॥१४॥

यस्याग्नेस्त्रिधातु त्रिरवृतमनावृतं चासंदिनमबद्धं च । स्तरणकाले हि बर्हिरबद्धं भवति । बर्हिस्तस्यावासनार्थं तिष्ठति तस्मिन्नग्नावापश्चिदापोऽपि पदं निदध । निदधति । आंतरिक्ष्या माध्यमिके पदं निदधतीत्यर्थः ॥

॥ अथ पंचदशी ॥

पदं देवस्यं मीळ्हुषोऽनांधृष्टाभिरूतिभिंः । भद्रा सूर्यं इवोपदृक् ॥१५॥

पदं । देवस्यं । मीळ्हुषंः । अनांधृष्टाभिः । ऊतिऽभिंः । भद्रा । सूर्यंःऽइव । उपऽदृक् ॥१५॥

मीळ्हुषः कामानां सेक्तुर्देवस्य द्योतमानस्याग्नेः पदं स्थानमनाधृष्टाभिः शत्रुभिरनाधृष्टाभिरूतिभी रक्षाभिर्भजनीयं भवतीत्यर्थः । तथैवास्योपदृगुपदृष्टिरपि सूर्य इव यथा सूर्यस्तद्वद्भद्रा मनुष्यैर्भजनीया भवति ॥

॥ इति षष्ठस्य सप्तम एकादशो वर्गः ॥

॥ अथ षोडशी ॥

अग्ने घृतस्यं धीतिभिंस्तेपानो देंव शोचिषां । आ देवान्वंक्षि यक्षिं च ॥१६॥

अग्नें । घृतस्यं । धीतिऽभिंः । तेपानः । देव । शोचिषां । आ । देवान् । वक्षि । यक्षिं । च ॥१६॥

हे देव द्योतमानाग्ने घृतस्य दीप्तिसाधनस्याज्यस्य धीतिभिर्निधानैस्तेपानस्तपन् शोचिषा ज्वालया देवान् प्रत्यावक्ष्यावह यक्षि यज च ॥

॥ अथ सप्तदशी ॥

तं त्वाजनंत मातरः कविं देवासो अंगिरः । हव्यवाहममर्त्यं ॥१७॥

तं । त्वा । अजनंत । मातरंः । कविं । देवासंः । अंगिरः । हव्यऽवाहं । अमर्त्यं ॥१७॥

हे अंगिरोऽग्ने कविं क्रांतकर्माणममर्त्यं मरणरहितं हव्यवाहं हविषां वोढारं तं प्रसिद्धं त्वा त्वां देवासो देवा मातर इवाजनंत । जनयंति ॥

॥ अथाष्टादशी ॥

प्रचेतसं त्वा कवेऽग्ने दूतं वरेण्यं । हव्यवाहं नि षेदिरे ॥ १८ ॥

प्रऽचेतसं । त्वा । कवे । अग्ने । दूतं । वरेण्यं । हव्यऽवाहं । नि । सेदिरे ॥ १८ ॥

हे कवे क्रांतकर्मन्नग्ने प्रचेतसं प्रकृष्टबुद्धिं वरेण्यं वरणीयं दूतं देवानां हव्यवाहं हविषां वोढारं त्वा त्वां नि षेदिरे । देवा निषीदंति ॥

॥ अथैकोनविंशी ॥

नहि मे अस्त्यघ्न्या न स्वधितिर्वनन्वति । अथैतादृग्भरामि ते ॥ १९ ॥

नहि । मे । अस्ति । अघ्न्या । न । स्वऽधितिः । वननऽवति । अथ । एतादृक् । भरामि । ते ॥ १९ ॥

हे अग्ने मे मम भार्गवस्य प्रयोगस्यर्षेरघ्न्या गौः ॥ अघ्न्येति गोनामसु पाठात ॥ न ह्यस्ति न विद्यते यस्याः पयसाज्येन च त्वां यजेय । किंच स्वधितिर्नहि वनन्वति काष्ठानि हंति यः काष्ठैस्त्वां समिंधीय । अथैतादृक् अग्निहोत्रार्थं पयसो दोग्ध्री गात्समिंधनसाधनानि चैतत्सर्वं ते तुभ्यमहं भरामि ॥

॥ अथ विंशी ॥

यदग्ने कानि कानि चिदा ते दारूणि दध्मसि । ता जुषस्व यविष्ठ्य ॥ २० ॥

यत् । अग्ने । कानि । कानि । चित् । आ । ते । दारूणि । दध्मसि । ता । जुषस्व । यविष्ठ्य ॥ २० ॥

पूर्वस्यामृच्युक्तस्यैवार्थस्य विवरणमेतच । हे यविष्ठ्य युवतमाग्ने तुभ्यं यद्यदा कानि कानि चित् यानि कान्यपि दारूणि काष्ठान्यादध्मसि आधारयामि तदा ता तान्यपरशुवृक्णान्यपि जुषस्व । सेवस्व । तथा च यजुर्ब्राह्मणं । न ह स्म वै पुराग्निरपरशुवृक्णं दहति तदस्मै प्रयोग एवर्षिरस्वदयद्यदग्ने कानि कानि चेति समिधमादधात्यपरशुवृक्णमेवास्मै स्वदयति सर्वस्मै स्वदते । तै० सं० ५. १. १०. १. इति ॥

॥ अथैकविंशी ॥

यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति। सर्वं तदस्तु ते घृतं ॥२१॥

यत्। अत्ति। उपऽजिह्विका। यत्। वम्रः। अतिऽसर्पति। सर्वं। तत्। अस्तु। ते। घृतं ॥२१॥

हे अग्ने यत्काष्ठादिकमुपजिह्विका। उपजिघ्रतीत्युपजिह्विका। अत्ति भक्षयति। यच्च काष्ठादिकं वम्रः। वमत्युदकमिति वम्रः। उपजिह्विकावम्रशब्दौ यद्यपि पर्यायौ तथापि पृथगुपादानाद्वम्रशब्दस्तद्विशेषे पर्यवस्यति। सोऽप्यतिसर्पति अतिगच्छति तत्सर्वं ते तव घृतं घृतसदृशमस्तु। यथा घृतं तव प्रियकरं भवति तथा प्रियकरं भवत्वित्यर्थः ॥

॥ अथ द्वाविंशी ॥

अग्निमिंधानो मनसा धियं सचेत मर्त्यः। अग्निमीधे विवस्वभिः ॥२२॥

अग्निं। इंधानः। मनसा। धियं। सचेत। मर्त्यः। अग्निं। ईधे। विवस्वऽभिः ॥२२॥

मर्त्यो मनुष्योऽग्निमिंधानः काष्ठैः प्रज्वलयन् मनसैव श्रद्दधानो धियं कर्म सचेत। काले भजेत। विवस्वभिर्ऋत्विग्भिश्चाग्निमेवेधे। प्रज्वलति ॥

॥ इति षष्ठस्य सप्तमे द्वादशो वर्गः ॥

अदर्शीति चतुर्दशर्चं दशमं सूक्तं काण्वस्य सोभरेरार्षं। अत्रानुक्रम्यते अदर्शि पञ्चूना सोभरिर्बार्हतं पंचमी विराड्रूपा सप्तम्याद्ययुजः सतोबृहत्यो ऽष्टम्यादि युजः ककुभ्भूमीयसी ककुबनुष्टुबंत्याग्निमारुतीति। पंचमीसप्तमीनवम्येकादशीत्रयोदश्यः पंच सतोबृहत्यः। अष्टमीद्वादश्यौ ककुभौ दशमी गायत्री चतुर्दश्यनुष्टुप् शिष्टा बृहत्यः। आग्नेयं त्वित्युक्तत्वादग्निर्देवता। अंत्यायास्त्वग्निर्मरुतश्च ॥ प्रातरनुवाकस्याग्नेये क्रतौ बार्हते छंदस्यादितः सप्तर्चः। सूत्रितं च। अदर्शि गातुवित्तम इति सप्तेति बार्हतं। आ० ४.१३.॥ आभिप्लविकेषूक्थ्येषु मैत्रावरुणस्य वैकल्पिकः स्तोत्रियस्तृचः। सूत्रितं च। मा चिदाग्ने याहि मरुत्सखा यत्ते राजन्नग्न इति ॥

॥ तत्र प्रथमा ॥

अदर्शि गातुवित्तमो यस्मिन्व्रतान्यादधुः।

उपो षु जातमार्यस्य वर्धनमग्निं नक्षंत नो गिरः ॥१॥

अदर्शि। गातुवित्ऽतमः। यस्मिन्। व्रतानि। आऽदधुः।

उपो इति। सु। जातं। आर्यस्य। वर्धनं। अग्निं। नक्षंत। नः। गिरः ॥१॥

यस्मिन्नग्नौ व्रतानि कर्माण्याद्धुर्यजमाना आदधन् गातुवित्तमोऽतिशयेन मार्गाणां ज्ञाता सोऽग्निरदर्शि। प्रादुरभूत्। किंच स्व जातं सम्यक् प्रादुर्भूतमस्यार्यस्योत्तमवर्णस्य वर्धनं वर्धयितारमग्निं नोऽस्माकं गिरः स्तुतिरूपा वाच उपो नक्षंत। उपगच्छंत्येव। नक्ष गताविति धातुः ॥

॥ अथ द्वितीया ॥

प्र दैवोदासो अग्निर्देवाँ अच्छा न मज्मना।

अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य सानवि ॥२॥

प्र। दैवःऽदासः। अग्निः। देवान्। अच्छ। न। मज्मना।

अनु। मातरं। पृथिवीं। वि। ववृते। तस्थौ। नाकस्य। सानवि ॥२॥

दैवोदासो दिवोदासेनाहूयमानोऽग्निर्मातरं। सर्वस्य लोकस्य धारणवत्त्वात्पृथिवी माता। तां पृथिवीमच्छ प्रति देवान् तस्य दिवोदासस्य यज्ञे देवान् अनु प्रतिहविर्वोढुं न प्रविवावृते। यस्मादेनमग्निं दिवोदासो मज्मना बलेनाजुहाव तस्मादयमग्निर्नाकस्य स्वर्गस्य सानवि समुच्छ्रिते देशे स्वायतन एव तस्थौ। अतिष्ठत् ॥

॥ अथ तृतीया ॥

यस्माद्रेजंत कृष्टयश्चर्कृत्यानि कृण्वतः।

सहस्रसां मेधसाताविव त्मनाग्निं धीभिः सपर्यत ॥३॥

यस्मात्। रेजंत। कृष्टयः। चर्कृत्यानि। कृण्वतः।

सहस्रऽसां। मेधसातौऽइव। त्मना। अग्निं। धीभिः। सपर्यत ॥३॥

यस्मात्कारणाच्चर्कृत्यानि कर्तव्यानि कर्माणि कृण्वतः कुर्वाणान्मनुष्यान् कृष्टय इतरे मनुष्या रेजंते कंपंते तस्मादिदानीं हे जना यूयं सहस्रसां गवां धनानां च सहस्रस्य दातारमग्निं मेधसातौ यज्ञे धीभिः कर्तव्यैः कर्मभिस्त्मनात्मनैव सपर्यत। परिचरत ॥

॥ अथ चतुर्थी ॥

प्र यं राये निनीषसि मर्तो यस्ते वसो दाशत्।

स वीरं धत्ते अग्न उक्थशंसिनं त्मना सहस्रपोषिणं ॥४॥

प्र । यं । राये । निनीषसि । मर्तः । यः । ते । वसो इति । दाशत् ।
सः । वीरं । धत्ते । अग्ने । उक्थऽशंसिनं । त्मना । सहस्रऽपोषिणं ॥४॥

हे वसो वासकाग्ने त्वं यं तव स्तोतारं राये धनार्थं प्रनिनीषसि प्रनेतुमिच्छसि यश्च मर्त्यो मनुष्यस्ते तुभ्यं दाशत् हवींषि प्रयच्छति । स मनुष्य उक्थशंसिनमुक्थानां शंसितारं त्मनात्मनैव सहस्रपोषिणं बहुधनं वीरं पुत्रं धत्ते । धारयति ॥

॥ अथ पंचमी ॥

स दृळ्हे चिदभि तृणत्ति वाजमर्वता स धत्ते अक्षिति श्रवः ।
त्वे देवत्रा सदा पुरूवसो विश्वा वामानि धीमहे ॥५॥

सः । दृळ्हे । चित् । अभि । तृणत्ति । वाजं । अर्वता । सः । धत्ते । अक्षिति । श्रवः ।
त्वे इति । देवऽत्रा । सदा । पुरुवसो इति पुरुऽवसो । विश्वा । वामानि । धीमहे ॥५॥

हे पुरूवसो बहुधनाग्ने यस्तुभ्यं हवींषि प्रयच्छति स यजमानो दृळ्हे चित् दृढेऽपि शत्रुपुरे स्थितं वाजमन्नमर्वताश्वेनाभितृणत्ति हिनस्ति । यथा स यजमानोऽक्षित्यक्षीणं श्रवोऽन्नं धत्ते धारयति । तथा च सति तुभ्यं हविषां प्रदातारो वयमपि देवत्रा देवे त्वे त्वयि स्थिता विश्वा सर्वाणि वामानि वननीयानि धनानि सदा सर्वदा धीमहि । धारयामः ॥

॥ इति षष्ठस्य सप्तमे त्रयोदशो वर्गः ॥

॥ अथ षष्ठी ॥

यो विश्वा दयते वसु होता मंद्रो जनानां ।
मधोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यंत्यग्नये ॥६॥

यः । विश्वा । दयते । वसु । होता । मंद्रः । जनानां ।
मधोः । न । पात्रा । प्रथमानि । अस्मै । प्र । स्तोमाः । यंति । अग्नये ॥६॥

होता देवानामाह्वाता मंद्रो मोदमानो योऽग्निर्विश्वा सर्वाणि वसु वसूनि धनानि जनानां जनेभ्यो दयते प्रयच्छति तस्मा अस्मा अग्नये मधोर्न मदकरस्य सोमस्येव प्रथमानि मुख्यानि पात्राणि स्तोमाः प्रयंति । प्रगच्छंति ॥

॥ अथ सप्तमी ॥

अश्वं न गीर्भी रथ्यं सुदानवो मर्मृज्यंते देवयवः ।
उभे तोके तनये दस्म विश्पते पर्षि राधो मघोनां ॥७॥
अश्वं । न । गीःऽभिः । रथ्यं । सुऽदानवः । मर्मृज्यंते । देवऽयवः ।
उभे इति । तोके इति । तनये । दस्म । विश्पते । पर्षि । राधः । मघोनां ॥७॥

हे दस्म दर्शनीय विश्पते विशां पतेऽग्ने यं त्वां सुदानवः शोभनदाना देवयवो देवानात्मन इच्छंतो यजमाना रथ्यं रथस्य वोढारमश्वं न अश्वमिव गीर्भिः स्तुतिभिर्मर्मृज्यंते परिचरंति स त्वमस्माकं यजमानानां तोके पुत्रे तनये पौत्रे चोभे उभयस्मिन्मघोनां धनवतां रायो धनं पर्षि । प्रयच्छ ॥

॥ अथाष्टमी ॥

प्र मंहिष्ठाय गायत ऋतावे बृहते शुक्रशोचिषे । उपस्तुतासो अग्नये ॥८॥
प्र । मंहिष्ठाय । गायत । ऋतऽवे । बृहते । शुक्रऽशोचिषे । उपऽस्तुतासः । अग्नये ॥८॥

हे यूयमुपस्तुतास उपस्तोतारो मंहिष्ठाय दातृतमाय ऋतावे यज्ञवते सत्यवते वा बृहते महते शुक्रशोचिषे दीप्ततेजसेऽग्नये स्तोत्रं पठत ॥

॥ अथ नवमी ॥

आ वंसते मघवा वीरवद्यशः समिद्धो द्युम्न्याहुतः ।
कुविन्नो अस्य सुमतिर्नवीयस्यच्छा वाजेभिरागमत् ॥९॥
आ । वंसते । मघऽवा । वीरऽवत् । यशः । संऽइद्धः । द्युम्नी । आऽहुतः ।
कुवित् । नः । अस्य । सुऽमतिः । नवीयसी । अच्छ । वाजेभिः । आऽगमत् ॥९॥

मघवा धनवान् द्युम्न्यन्नवान् यशस्वी वा ॥ तथा च यास्कः । द्युम्नं द्योततेर्यशो वान्नं वा ॥ यशो यशस्करमन्नमा वंसते । यजमानेभ्य आ प्रयच्छति । तस्याग्नेर्नवीयसी नवतरा सुमतिरनुग्रहबुद्धिर्नोऽस्मानच्छ प्रति वाजेभिरन्नैः सह कुवित् बहुवारं ॥ सलिलं कुविदिति बहुनामसु पाठात् ॥ आगमत् आगच्छतु ॥

॥ अथ दशमी ॥

प्रेष्ठमु प्रियाणां स्तुह्यासावातिथिं । अग्निं रथानां यमं ॥१०॥

प्रेष्ठं । ऊं इति । प्रियाणां । स्तुहि । आसाव । अतिथिं । अग्निं । रथानां । यमं ॥१०॥

हे आसाव स्तोतः प्रियाणां प्रेष्ठं प्रियतममतिथिमभ्यागतं रथानां यमं यंतारमग्निमेव स्तुहि ॥

॥ इति षष्ठस्य सप्तमे चतुर्दशो वर्गः ॥

॥ अथैकादशी ॥

उदिता यो निदिता वेदिता वस्वा यज्ञियो ववर्तति ।

दुष्टरा यस्य प्रवणे नोर्मयो धिया वाजं सिषासतः ॥११॥

उत्ऽइता । यः । निऽदिता । वेदिता । वसु । आ । यज्ञियः । ववर्तति ।

दुस्तराः । यस्य । प्रवणे । न । ऊर्मयः । धिया । वाजं । सिसासतः ॥११॥

वेदिता वेत्ता यज्ञियो यज्ञार्हो योऽग्निरुदितोदितान्युद्गतानि निदिता निदितानि श्रुतानि च वसु वसूनि धनान्या ववर्तति आवर्तयति । धिया कर्मणा वाजं संग्रामं सिषासतः संभक्तुमिच्छतो यस्य चाग्नेर्ज्वालाः प्रवणे नोर्मयः प्रवणाभिमुखाः समुद्रस्य तरंगा इव दुष्टरास्तर्तुमशक्याः तमग्निं हे स्तोतः स्तुहीत्यर्थः ॥

॥ अथ द्वादशी ॥

मा नो हृणीतामतिथिर्वसुरग्निः पुरुप्रशस्त एषः । यः सुहोता स्वध्वरः ॥१२॥

मा । नः । हृणीतां । अतिथिः । वसुः । अग्निः । पुरुऽप्रशस्तः । एषः । यः । सुऽहोता ।
सुऽअध्वरः ॥१२॥

वसुर्वासकोऽतिथिरतिथिवत्प्रियः पुरुप्रशस्तो बहुभिः स्तुतः सुहोता सुष्ठु देवानामाह्वाता स्वध्वरः सुयज्ञश्च योऽग्निः स एषोऽग्निर्नोऽस्मभ्यं मा हृणीतां । केनापि न रुध्यतां । केनाप्यनवरुद्धः सन् अग्निरस्मभ्यमभीष्टं प्रयच्छत्वित्यर्थः ॥

॥ अथ त्रयोदशी ॥

मो ते रिषन्ये अच्छोक्तिभिर्वसोऽग्ने केभिश्चिदेवैः ।

कीरिश्चिद्धि त्वामीट्टे दूत्याय रातहव्यः स्वध्वरः ॥१३॥

मो इति॑ । ते । रि॒ष॒न् । ये । अच्छो॑क्तिऽभिः । व॒सो॒ इति॑ । अग्ने॑ । केभिः॑ । चि॒त् । एवैः॑ ।
की॒रिः । चि॒त् । हि । त्वां । ईट्टे॑ । दू॒त्या॑य । रा॒तऽह॑व्यः । सु॒ऽअ॒ध्व॒रः ॥ १३॥

हे वसो वासकाग्ने त्वां ये मनुष्या अच्छोक्तिभिरभिष्टुतिभिः केभिः कैः सुख-करैरेवैश्चिदभिगमनैरपि ते स्तोतारो मो रिषन् । मैव हिंसंतां । रातहव्यो दत्तह-विष्कः कीरिश्चित् स्तोतापि दूत्याय हविर्वहनादिलक्षणाय दूतकर्मणे त्वामीट्टे हि । स्तौति खलु ॥

॥ अथ चतुर्दशी ॥

आग्ने॑ याहि म॒रुत्स॑खा रु॒द्रेभिः॒ सोम॑पीतये ।
सोभ॑र्या॒ उप॑ सुष्टु॒तिं मा॒दय॑स्व॒ स्व॑र्णरे ॥ १४॥

आ । अ॒ग्ने॒ । या॒हि॒ । म॒रुत्ऽस॑खा । रु॒द्रेभिः॑ । सोम॑ऽपीतये ।
सोभ॑र्याः । उप॑ । सु॒ऽस्तु॒तिं । मा॒दय॑स्व । स्वः॑ऽनरे ॥ १४॥

हे अग्ने मरुत्सखा मरुतां प्रियस्त्वं स्वर्णरेऽस्माकं यजनलक्षणे कर्मणि सोमपीतये सोमपानाय रुद्रेभी रुद्रैर्मरुद्भिः सहायाहि । आगच्छ । सोभर्याः सोभरेर्मम सुष्टुतिं शोभनां स्तुतिं चोपागच्छ । मादयस्व । स्तुतिं श्रुत्वा सोमं पीत्वात्मानं मादय च ॥

॥ इति षष्ठस्य सप्तमे पंचदशो वर्गः ॥

॥ इत्यष्टमे मंडले दशमोऽनुवाकः समाप्तं चाष्टमं मंडलं ॥

# SARVÁNUKRAMAḤ.

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 20 | 7.2.3 | 5.3.1 | Ugro jajne | 10 | Vasishṭhaḥ. | Indraḥ. | Trishṭup. | 1 |
| 21 | 7.2.4 | 5.3.3 | Asávi devam | 10 | The same. | The same. | The same. | 5 |
| 22 | 7.2.5 | 5.3.5 | Pibá somam | 9 | ...... | ...... | 1–8 Viráṭ, 9 Trishṭ. | 10 |
| 23 | 7.2.6 | 5.3.7 | Ud u brahmáṇi | 6 | ...... | ...... | Trishṭup. | 13 |
| 24 | 7.2.7 | 5.3.8 | Yonish ṭe | 6 | ...... | ...... | The same. | 15 |
| 25 | 7.2.8 | 5.3.9 | Á te mahaḥ | 6 | ...... | ...... | ...... | 18 |
| 26 | 7.2.9 | 5.3.10 | Na somaḥ | 5 | ...... | ...... | ...... | 20 |
| 27 | 7.2.10 | 5.3.11 | Indram naraḥ | 5 | ...... | ...... | ...... | 22 |
| 28 | 7.2.11 | 5.3.12 | Brahmá ṇaḥ | 5 | ...... | ...... | ...... | 24 |
| 29 | 7.2.12 | 5.3.13 | Ayam somaḥ | 5 | ...... | ...... | ...... | 26 |
| 30 | 7.2.13 | 5.3.14 | Á no deva | 5 | ...... | ...... | ...... | 28 |
| 31 | 7.2.14 | 5.3.15 | Pra va indráya | 12 | ...... | ...... | 1–9 Gáyatrí, 10–12 Viráṭ. | 30 |
| 32 | 7.2.15 | 5.3.17 | Mo shu tvá | 27 | Vasishṭhaḥ, 26*a* S'aktir Vásishṭho vá. | ...... | Prágátham, 3 Dvipadá Viráṭ. | 34 |
| 33 | 7.2.16 | 5.3.22 | S'vityancaḥ | 14 | 1–9 Vasishṭhaḥ, 10–14 Vasishṭhaputráḥ, Vasishṭhasya saputrasya Indreṇa vá samvádaḥ. | 1–9 Vasishṭhaputráḥ, 10–14 Vasishṭhaḥ. | Trishṭup. | 45 |
| 34 | 7.3.1 | 5.3.25 | Pra śukrá | 25 | Vasishṭhaḥ. | Viśve Deváḥ, 16 Abjá Ahiḥ, 17 Ahir budhnyaḥ. | 1–21 Dvipadá Viráṭ, 22–25 Trishṭup. | 52 |
| 35 | 7.3.2 | 5.3.28–30 | S'am naḥ | 15 | The same. | Viśve Deváḥ (S'ántiḥ). | Trishṭup. | 59 |
| 36 | 7.3.3 | 5.4.1 | Pra brahmá | 9 | ...... | Viśve Deváḥ. | The same. | 65 |
| 37 | 7.3.4 | 5.4.3 | Á vo váhishṭhaḥ | 8 | ...... | The same. | ...... | 69 |
| 38 | 7.3.5 | 5.4.5 | Ud u shyaḥ | 8 | ...... | Savitá, 7 and 8 Vájí, 6*b* Bhago vá. | ...... | 73 |
| 39 | 7.3.6 | 5.4.6 | U'rddhvo agniḥ | 7 | ...... | Viśve Deváḥ. | ...... | 76 |
| 40 | 7.3.7 | 5.4.7 | O śrushṭiḥ | 7 | ...... | The same. | ...... | 80 |
| 41 | 7.3.8 | 5.4.8 | Prátar agnim | 7 | ...... | Bhagaḥ, 1 Lingoktadevatáḥ, 7 Usháḥ. | 1 Jagatí, 2–7 Trishṭup. | 82 |
| 42 | 7.3.9 | 5.4.9 | Pra brahmáṇaḥ | 6 | ...... | Viśve Deváḥ. | Trishṭup. | 85 |
| 43 | 7.3.10 | 5.4.10 | Pra vo yajneshu | 5 | ...... | The same. | The same. | 88 |
| 44 | 7.3.11 | 5.4.11 | Dadhikrám | 5 | ...... | Dadhikráḥ, 1 Lingoktadevatáḥ. | 1 Jagatí, 2–5 Trishṭup. | 90 |

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 45 | 7.3.12 | 5.4.12 | A' devo yátu | 4 | Vasishthah. | Savitá. | Trishtup. | 92 |
| 46 | 7.3.13 | 5.4.13 | Imá rudráya | 4 | The same. | Rudrah. | 1–3 Jagatí, 4 Trisht. | 94 |
| 47 | 7.3.14 | 5.4.14 | A'po yam | 4 | ...... | A'pah. | The same. | 96 |
| 48 | 7.3.15 | 5.4.15 | Ribhukshanah | 4 | ...... | Ribhavah, 4 Vis've Devá vá. | ...... | 98 |
| 49 | 7.3.16 | 5.4.16 | Samudrajyeshtháh | 4 | ...... | A'pah. | ...... | 100 |
| 50 | 7.3.17 | 5.4.17 | A' mám mitráva-runá | 4 | ...... | 1 Mitrávarunau, 2 Agnih, 3 Vis've Deváh, 4 Gangá-dinadyah. | 1–3 Jagatí, 4 Atija-gatí S'akvarí vá. | 101 |
| 51 | 7.3.18 | 5.4.18 | A'dityánám | 3 | ...... | A'dityáh. | Trishtup. | 103 |
| 52 | 7.3.19 | 5.4.19 | A'dityásah | 3 | ...... | The same. | The same. | 105 |
| 53 | 7.3.20 | 5.4.20 | Pra dyává | 3 | ...... | Dyáváprithivyau. | ...... | 106 |
| 54 | 7.3.21 | 5.4.21 | Vástoshpate | 3 | ...... | Vástoshpatih. | ...... | 108 |
| 55 | 7.3.22 | 5.4.22 | Amívahá | 8 | ...... | 1 Vástoshpatih, 2–8 Indrah. | 1 Gáyatrí, 2–4 Upa-rishtádbrihatí, 5–8 Anushtup. (Upa-nishat.) | 109 |
| 56 | 7.4.1 | 5.4.23 | Ka ím vyaktáh | 25 | ...... | Marutah. | 1–11 Dvipadá Virát, 12–25 Trishtup. | 112 |
| 57 | 7.4.2 | 5.4.27 | Madhvo vah | 7 | ...... | The same. | Trishtup. | 121 |
| 58 | 7.4.3 | 5.4.28 | Pra sákamukshe | 6 | ...... | ...... | The same. | 124 |
| 59 | 7.4.4 | 5.4.29–30 | Yam tráyadhve | 12 | ...... | 1–11 Marutah, 12 Rudrah (Mrityuvi-mociní). | 1, 3 and 5 Brihatí, 2, 4 and 6 Satobrihatí, 7 and 8 Trishtup, 9, 10 and 11 Gáya-trí, 12 Anushtup. | 127 |
| 60 | 7.4.5 | 5.5.1 | Yad adya súrya | 12 | ...... | Mitrávarunau. 1 Súryah. | Trishtup. | 132 |
| 61 | 7.4.6 | 5.5.3 | Ud vám cakshuh | 7 | ...... | Mitrávarunau. | The same. | 137 |
| 62 | 7.4.7 | 5.5.4 | Ut súryah | 6 | ...... | 1–3 Súryah, 4–6 Mitrávarunau. | ...... | 140 |
| 63 | 7.4.8 | 5.5.5 | Ud v eti | 6 | ...... | 1–5*a* Súryah, 5*b*–6 Mitrávarunau. | ...... | 143 |
| 64 | 7.4.9 | 5.5.6 | Divi kshayantá | 5 | ...... | Mitrávarunau. | ...... | 145 |
| 65 | 7.4.10 | 5.5.7 | Prati vám | 5 | ...... | The same. | ...... | 147 |
| 66 | 7.4.11 | 5.5.8 | Pra mitrayoh | 19 | ...... | 1–3 Mitrávarunau, 4–13 A'dityáh, 14–16 Súryah, 17–19 Mitrávarunau. | 1–9 Gáyatrí, 10, 12 and 14 Brihatí, 11, 13 and 15 Satobri-hatí, 16 Pura-ush-nik, 17–19 Gáyatrí. | 149 |
| 67 | 7.4.12 | 5.5.12 | Prati vám ratham | 10 | ...... | As'vinau. | Trishtup. | 156 |
| 68 | 7.4.13 | 5.5.14 | A' s'ubhrá | 9 | ...... | The same. | 1–7 Virát, 8 and 9 Trishtup. | 161 |
| 69 | 7.4.14 | 5.5.16 | A' vám rathah | 8 | ...... | ...... | Trishtup. | 165 |
| 70 | 7.4.15 | 5.5.17 | A' vis'vavárá | 7 | ...... | ...... | The same. | 168 |

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 71 | 7.5.1 | 5.5.18 | Apa svasuḥ | 6 | Vasishṭhaḥ. | A'svinau. | Trishṭup. | 171 |
| 72 | 7.5.2 | 5.5.19 | A' gomatá | 5 | The same. | The same. | The same. | 173 |
| 73 | 7.5.3 | 5.5.20 | Atárishma | 5 | ...... | ...... | ...... | 176 |
| 74 | 7.5.4 | 5.5.21 | Imá u vám | 6 | ...... | ...... | Prágátham. | 178 |
| 75 | 7.5.5 | 5.5.22 | Vy usháḥ | 8 | ...... | Usháḥ. | Trishṭup. | 180 |
| 76 | 7.5.6 | 5.5.23 | Ud u jyotiḥ | 7 | ...... | The same. | The same. | 184 |
| 77 | 7.5.7 | 5.5.24 | Upo ruruce | 6 | ...... | ...... | ...... | 187 |
| 78 | 7.5.8 | 5.5.25 | Prati ketavaḥ | 5 | ...... | ...... | ...... | 190 |
| 79 | 7.5.9 | 5.5.26 | Vy ushá ávaḥ | 5 | ...... | ...... | ...... | 193 |
| 80 | 7.5.10 | 5.5.27 | Prati stomebhiḥ | 3 | ...... | ...... | ...... | 194 |
| 81 | 7.5.11 | 5.6.1 | Praty v adarsi | 6 | ...... | ...... | Prágátham. | 195 |
| 82 | 7.5.12 | 5.6.2 | Indrávaruṇá | 10 | ...... | Indrávaruṇau. | Jagatí. | 198 |
| 83 | 7.5.13 | 5.6.4 | Yuvám nará | 16 | ...... | The same. | The same. | 203 |
| 84 | 7.5.14 | 5.6.6 | A' vám rájánau | 5 | ...... | ...... | Trishṭup. | 207 |
| 85 | 7.5.15 | 5.6.7 | Puníshe vám | 5 | ...... | ...... | The same. | 209 |
| 86 | 7.5.16 | 5.6.8 | Dhírá tu asya | 8 | ...... | Varuṇaḥ. | ...... | 212 |
| 87 | 7.5.17 | 5.6.9 | Radat pathaḥ | 7 | ...... | The same. | ...... | 215 |
| 88 | 7.5.18 | 5.6.10 | Pra sundhyuvam | 7 | ...... | ...... | ...... | 219 |
| 89 | 7.5.19 | 5.6.11 | Mo shu varuṇa | 5 | ...... | ...... | 1–4 Gáyatrí, 5 Jagatí. | 222 |
| 90 | 7.6.1 | 5.6.12 | Pra vírayá | 7 | ...... | Váyuḥ, 5–7 Indraváyú. | Trishṭup. | 224 |
| 91 | 7.6.2 | 5.6.13 | Kuvid anga | 7 | ...... | Váyuḥ. | The same. | 227 |
| 92 | 7.6.3 | 5.6.14 | A' váyo bhúsha | 5 | ...... | The same. | ...... | 231 |
| 93 | 7.6.4 | 5.6.15 | S'ucim nu stomam | 8 | ...... | Indrágní. | ...... | 234 |
| 94 | 7.6.5 | 5.6.17 | Iyam vám | 12 | ...... | The same. | 1–11 Gáyatrí, 12 Anushṭup. | 237 |
| 95 | 7.6.6 | 5.6.19 | Pra kshodasá | 6 | ...... | Sarasvatí, 3 Sarasván. | Trishṭup. | 241 |
| 96 | 7.6.7 | 5.6.20 | Bṛihad u | 6 | ...... | 1–3 Sarasvatí, 4–6 Sarasván. | 1 Bṛihatí, 2 Satobṛihatí, 3 Prastárapankti, 4–6 Gáyatrí. | 244 |
| 97 | 7.6.8 | 5.6.21 | Yajne divaḥ | 10 | ...... | Bṛihaspatiḥ, 1 Indraḥ, 3 and 9 Indrábráhmaṇaspatí, 10 Indrábṛihaspatí. | Trishṭup. | 246 |
| 98 | 7.6.9 | 5.6.23 | Adhvaryavaḥ | 7 | ...... | Indraḥ, 7 Indrábṛihaspatí. | The same. | 251 |
| 99 | 7.6.10 | 5.6.24 | Paro mátrayá | 7 | ...... | Vishṇuḥ, 4–7 Indrávishṇú. | ...... | 253 |
| 100 | 7.6.11 | 5.6.25 | Nú marto | 7 | ...... | Vishṇuḥ. | ...... | 257 |
| 101 | 7.6.12 | 5.7.1 | Tisro vácaḥ | 6 | Vasishṭhaḥ or Kumára A'gneyaḥ. | Parjanyaḥ. | ...... | 261 |
| 102 | 7.6.13 | 5.7.2 | Parjanyáya | 3 | The same. | The same. | ...... | 264 |

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 103 | 7.6.14 | 5.7.3 | Samvatsaram | 10 | Vasishthah. | Mandúkáh. | 1 Anushtup, 2–10 Trishtup. | 265 |
| 104 | 7.6.16 | 5.7.5–9 | Indrásomá | 25 | The same. | Indrásomau, 9, 12 and 13 Somah, 11 Deváh, 8 and 16 Indrah, 17 Grává, 18 Marutah, 10 and 14 Agnih, 19–22, 24 Indrah, 23*a* Ásíh, 23*b* Prithivyantarikshau. | 1–6 Jagatí, 7 Jagatí or Trishtup, 18, 21 and 23 Jagatí, 25 Anushtup, 8–17, 19, 20, 22 and 24 Trishtup. | 270 |
| 1 | 8.1.1 | 5.7.10 | Má cid | 34 | Medhátithih and Medhyátithih, of the family of Kanvah. 1 and 2 Pragáthah, the son of Ghorah, having become the son of his brother Kanvah. 30–33 Ásangah, son of king Playogah, 34 Sásvatí, the daughter of Angirás, the wife of Ásangah. | Indrah, 30–33 Dánastutih (Ásangah), 34 king Ásangah. | 1, 3, 5–32 Brihatí, 2 and 4 Satobrihatí, 33 and 34 Trishtup. | 282 |
| 2 | 8.1.2 | 5.7.17 | Idam vaso | 42 | Medhátithih Kánvah and Priyamedha Ángirasah. 41 and 42 Medhátithih only. | Indrah, 41 and 42 Dánastutih (Vibhindhuh). | 1–27, 29–42 Gáyatrí, 28 Anushtup. | 298 |
| 3 | 8.1.3 | 5.7 25 | Pibá sutasya | 24 | Medhyátithih Kánvah. | Indrah, 21–24 Dánastutih (king Pákasthámá, son of Kurayánah). | 1–20 Prágátham, 21 Anushtup, 22 and 23 Gáyatrí, 24 Brihatí. | 312 |
| 4 | 8.1.4 | 5.7.30–33 | Yad indra | 21 | Devátithih, of the family of Kanvah. | 1–14 Indrah, 15–18 Indrah or Púshá, 19–21 Dánastutih (Kurungah). | 1–20 Prágátham, 21 Puraushnik. | 324 |
| 5 | 8.1.5 | 5.8.1 | Dúrád iheva | 39 | Brahmátithih, of the family of Kanvah. | 1–37*a* Ásvinau, 37*b*–39 Dánastutih (king Kasu, son of Cedih). | 1–36 Gáyatrí, 37 and 38 Brihatí, 39 Anushtup. | 335 |
| 6 | 8.2.1 | 5.8.9 | Mahán indra | 48 | Vatsah, of the family of Kanvah. | 1–45 Indrah, 46–48 Dánastutih (Tirindirah, son of king Parasuh). | Gáyatrí. | 349 |

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 7 | 8.2.2 | 5.8.18 | Pra yad vaḥ | 36 | Punarvatsaḥ, of the family of Kaṇvaḥ. | Marutaḥ. | Gáyatrí. | 364 |
| 8 | 8.2.3 | 5.8.25 | A' no viśvábhiḥ | 23 | Sadhvansaḥ, of the family of Kaṇvaḥ. | Aśvinau. | Anushṭup. | 376 |
| 9 | 8.2.4 | 5.8.30 | A' núnam | 21 | S'aśakarṇaḥ. | The same. | 1, 4, 6, 14 and 15 Bṛihatí, 2, 3, 20 and 21 Gáyatrí, 5 Kakup, 10 Trishṭup, 11 Viráṭ, 12 Jagatí, 7–9, 13, 16–19 Anushṭup. | 385 |
| 10 | 8.2.5 | 5.8.34 | Yat sthaḥ | 6 | Pragáthaḥ, son of Kaṇvaḥ. | ...... | 1 Bṛihatí, 2 Trishṭup (madhyejyotiḥ), 3 Anushṭup, 4 A'stárapanktiḥ, 5 Bṛihatí, 6 Satobṛihatí. | 394 |
| 11 | 8.2.6 | 5.8.35 | Tvam agne | 10 | Vatsaḥ, of the family of Kaṇvaḥ. | Agniḥ. | 1 Pratishṭhá Gáyatrí, 2 Vardhamáná, 3–9 Gáyatrí, 10 Trishṭup. | 396 |
| 12 | 8.2.7 | 6.1.1 | Ya indra | 33 | Parvataḥ, of the family of Kaṇvaḥ. | Indraḥ. | Ushṇik. | 401 |
| 13 | 8.3.1 | 6.1.7 | Indraḥ suteshu | 33 | Náradaḥ Káṇvaḥ. | The same. | The same. | 415 |
| 14 | 8.3.2 | 6.1.14 | Yad indra | 15 | Goshúktí and Aśvasúktí, of the family of Kaṇvaḥ. | ...... | ...... | 427 |
| 15 | 8.3.3 | 6.1.17 | Tam vabhi | 13 | The same. | ...... | ...... | 431 |
| 16 | 8.3.4 | 6.1.20 | Pra samrájam | 12 | Irimbithiḥ Káṇvaḥ. | ...... | ...... | 437 |
| 17 | 8.3.5 | 6.1.22 | A' yáhi | 15 | The same. | ...... | 1–13 Gáyatrí, 14 and 15 Prágátham. | 440 |
| 18 | 8.3.6 | 6.1.25 | Idam ha | 22 | ...... | 1–7, 10–22 A'dityáḥ, 8 Aśvinau, 9 Agni-Súrya-Váyavaḥ. | Ushṇik. | 445 |
| 19 | 8.3.7 | 6.1.29 | Tam gúrdhaya | 37 | Sobhariḥ Káṇvaḥ. | 1–33 Agniḥ, 34 and 35 A'dityáḥ, 36 and 37 Dánastutiḥ (king Trasadasyuḥ). | 1–26, 28–33 Prágátham Kákubham, 27 Dvipadá Viráṭ, 34 Ushṇik, 35 Satobṛihatí, 36 Kakup, 37 Panktiḥ. | 453 |
| 20 | 8.3.8 | 6.1.36–40 | A' ganta | 26 | The same. | Marutaḥ. | Prágátham Kákubham. | 467 |

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 21 | 8.4.1 | 6.2.1 | Vayam u tvám | 18 | Sobhariḥ Káṇvaḥ. | Indraḥ, 17 and 18 Dánastutiḥ (Citraḥ). | Prágátham Kákubham. | 478 |
| 22 | 8.4.2 | 6.2.5 | O tyam | 18 | The same. | Aśvinau. | 1–6 Prágátham, 7 Bṛihatí, 8 Anushṭup, 9 and 10 Prágátham Kákubham, 11 Kakup, 12 Madhyejyotiḥ, 13–18 Prágátham Kákubham. | 486 |
| 23 | 8.4.3 | 6.2.9 | I'lishva | 30 | Viśvamanáḥ, the son of Vyaśvaḥ. | Agniḥ. | Ushṇik. | 494 |
| 24 | 8.4.4 | 6.2.15 | Sakháyaḥ | 30 | The same. | Indraḥ, 28–30 Dánastutiḥ (king Vasuḥ, son of Sushámá). | Ushṇik, 30 Anushṭup. | 505 |
| 25 | 8.4.5 | 6.2.21 | Tá vám | 24 | ...... | Maitrávaruṇau, 10–12 Viśve Deváḥ. | Ushṇik, 23 Ushṇiggarbhá. | 518 |
| 26 | 8.4.6 | 6.2.26 | Yuvor u | 25 | Viśvamanáḥ or Vyaśva A'ngirasaḥ. | Aśvinau, 20–24 Váyuḥ. | 1–15, 22–24 Ushṇik, 16–19, 21–25 Gáyatrí, 20 Anushṭ. | 528 |
| 27 | 8.4.7 | 6.2.31 | Agnir ukthe | 22 | Manur, son of Vivasván. | Viśve Deváḥ. | Prágátham. | 538 |
| 28 | 8.4.8 | 6.2.35 | Ye trinśati | 5 | The same. | The same. | Gáyatrí, 7 Puraushṇik. | 548 |
| 29 | 8.4.9 | 6.2.36 | Babhruḥ | 10 | Manuḥ or Kaśyapaḥ, the son of Maríciḥ. | ...... | Dvaipadam. | 551 |
| 30 | 8.4.10 | 6.2.37 | Nahi vaḥ | 4 | Manur Vaivasvataḥ. | ...... | 1 Gáyatrí, 2 Puraushṇik, 3 Bṛihatí, 4 Anushṭup. | 554 |
| 31 | 8.5.1 | 6.2.38–40 | Yo yajáti | 18 | The same. | 1–4 I'jyástavaḥ and Yajamánapraśansá, 5–9 Dampatí, 10–18 Dampatyor áśishaḥ. | 1–8, 11–13 Gáyatrí, 9 and 14 Anushṭup, 15–18 Panktiḥ, 10 Pádanicṛit. | 556 |
| 32 | 8.5.2 | 6.3.1 | Pra kṛitáni | 30 | Medhátithiḥ Káṇvaḥ. | Indraḥ. | Gáyatrí. | 563 |
| 33 | 8.5.3 | 6.3.7 | Vayam gha | 19 | Medhyátithiḥ. | The same. | 1–15 Bṛihatí, 16–18 Gáyatrí, 19 Anushṭ. | 571 |
| 34 | 8.5.4 | 6.3.11 | Endra yáhi | 18 | Nípátithiḥ Káṇvaḥ 16–18, the 1000 Vasurocis, of the family of Angirás. | ...... | 1–15 Anushṭup, 16–18 Gáyatrí. | 578 |

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 35 | 8.5.5 | 6.3.14 | Agniná | 24 | S'yáváśva A'treyaḥ. | Aśvinau. | 1–21 Uparishṭájjyotiḥ, 22 and 24 Panktiḥ, 23 Mahábṛihatí. | 583 |
| 36 | 8.5.6 | 6.3.18 | Avitási | 7 | The same. | Indraḥ. | 1–6 S'akvarí, 7 Mahápanktiḥ. | 591 |
| 37 | 8.5.7 | 6.3.19 | Predam | 7 | ...... | The same. | 1 Atijagatí, 2–7 Mahápanktiḥ. | 594 |
| 38 | 8.5.8 | 6.3.20 | Yajnasya | 10 | ...... | Indrágní. | Gáyatrí. | 596 |
| 39 | 8.5.9 | 6.3.22 | Agnim | 10 | Nábhákaḥ Káṇvaḥ. | Agniḥ. | Mahápanktiḥ. | 598 |
| 40 | 8.5.10 | 6.3.24 | Indrágní | 12 | The same. | Indrágní. | 1, 3–11 Mahápanktiḥ, 2 S'akvarí, 12 Trishṭup. | 602 |
| 41 | 8.5.11 | 6.3.26 | Asmá u | 10 | ...... | Varuṇaḥ. | Mahápanktiḥ. | 607 |
| 42 | 8.5.12 | 6.3.28 | Astabhnát | 6 | Arcanánás or Nábhákaḥ. | 1–3 Varuṇaḥ, 4–6 Aśvinau. | 1–3 Trishṭup, 4–6 Anushṭup. | 612 |
| 43 | 8.6.1 | 6.3.29 | Ime viprasya | 33 | Virúpa A'ngirasaḥ. | Agniḥ. | Gáyatrí. | 614 |
| 44 | 8.6.2 | 6.3.36 | Samidhá | 30 | The same. | The same. | The same. | 623 |
| 45 | 8.6.3 | 6.3.42 | A' ghá ye | 42 | TriśokaḥKáṇvaḥ. | Indraḥ, 1 Indraḥ and Agniḥ. | ...... | 630 |
| 46 | 8.6.4 | 6.4.1 | Tvávataḥ | 33 | Vaśaḥ, son of Aśvaḥ. | 1–20, 29, 30, 31 and 33 Indraḥ, 21–24 Dánastutiḥ (Pṛithuśravás, son of Kanítaḥ), 25–28, 32 Váyuḥ. | 1 Pádanicṛit, 2–4 Gáyatrí, 5 Kakup, 6 Gáyatrí, 7 Bṛihatí, 8 Anushṭup, 9 Satobṛihatí, 10 Gáyatrí, 11 Bṛihatí, 12 Viparítá Satobṛihatí, 13 Dvipadá, 14 Pipílikamadhyá, 15 Kakum nyankuśirá, 16 Viráṭ, 17 Jagatí, 18 Uparishṭádbṛihatí, 19 Bṛihatí, 20 Vishamapadá Bṛihatí, 21 and 22 Panktiḥ, 23 Gáyatrí, 24 Panktiḥ, 25 and 27 Bṛihatí, 26 and 28 Satobṛihatí, 29 Gáyatrí, 30 Dvipadá Viráṭ, 31 Ushṇik, 32 Panktiḥ, 33 Gáyatrí. | 642 |
| 47 | 8.6.5 | 6.4.7 | Mahi vaḥ | 18 | Trita A'ptyaḥ. | 1–13 A'dityáḥ, 14–18 A'dityáḥ and Ushás. | Mahápanktiḥ. | 654 |
| 48 | 8.6.6 | 6.4.11 | Svádoḥ | 15 | Pragáthaḥ Káṇvaḥ. | Somaḥ. | 1–4, 6–15 Trishṭup, 5 Jagatí. | 662 |
| 49 | | 6.4.14 | Abhi pra vaḥ | 10 | Válakhilyam. | | | 669 |
| 50 | | 6.4.16 | Pra suśrutam | 10 | | | | 671 |

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 51 | | 6.4.18 | Yathá manau | 10 | Válakhilyam. | | | 674 |
| 52 | | 6.4.20 | Yathá manau | 10 | | | | 676 |
| 53 | | 6.4.22 | Upamam tvá | 8 | | | | 679 |
| 54 | | 6.4.24 | Etat te | 8 | | | | 681 |
| 55 | | 6.4.26 | Bhuríd indrasya | 5 | | | | 683 |
| 56 | | 6.4.27 | Prati te | 5 | | | | 684 |
| 57 | | 6.4.28 | Yuvam devá | 4 | | | | 685 |
| 58 | | 6.4.29 | Yam ṛitvijaḥ | 3 | | | | 686 |
| 59 | | 6.4.30 | Imáni vám | 7 | | | | 686 |
| 60 | 8.7.1 | 6.4.32 | Agna á yáhi | 20 | Bhargaḥ, son of Pragáthaḥ. | Agniḥ. | Prágátham. | 689 |
| 61 | 8.7.2 | 6.4.36 | Ubhayam | 18 | The same. | Indraḥ. | The same. | 697 |
| 62 | 8.7.3 | 6.4.40 | Pro asmai | 12 | Pragáthaḥ Káṇvaḥ. | The same. | 1–6, 10–12 Panktiḥ, 7–9 Bṛihatí. | 704 |
| 63 | 8.7.4 | 6.4.42 | Saḥ púrvyaḥ | 12 | The same. | 1–11 Indraḥ, 12 Deváḥ. | 1, 4, 5 and 7 Anushṭup, 2, 3, 6, 8–11 Gáyatrí, 12 Trishṭup. | 709 |
| 64 | 8.7.5 | 6.4.44 | Ut tvá madantu | 12 | ...... | Indraḥ. | Gáyatrí. | 713 |
| 65 | 8.7.6 | 6.4.46 | Yad indra | 12 | ...... | The same. | The same. | 716 |
| 66 | 8.7.7 | 6.4.48 | Tarobhir vaḥ | 15 | Kaliḥ, son of Pragáthaḥ. | ...... | 1–14 Prágátham, 15 Anushṭup. | 719 |
| 67 | 8.7.8 | 6.4.51–54 | Tyán nu | 21 | Matsyaḥ, son of Samadaḥ, or Mányaḥ, son of Mitrávaruṇau, or fishes caught in a net. | A'dityáḥ. | Gáyatrí. | 726 |
| 68 | 8.7.9 | 6.5.1 | A' tvá ratham | 19 | Priyamedha A'ngirasaḥ. | 1–13 Indraḥ, 14–19 Dánastutiḥ (Ṛikshaḥ and Aśvamedhaḥ). | 1, 4, 7 and 10 Anushṭup, 2, 3, 5, 6, 8, 9, 11–19 Gáyatrí. | 733 |
| 69 | 8.7.10 | 6.5.5 | Prapra vaḥ | 18 | The same. | Indraḥ, 11 *a* Viśve Deváḥ, 11 *b* and 12 Varuṇaḥ. | 1, 3, 7–10, 12–15 Anushṭup, 2 Ushṇik, 4–6 Gáyatrí, 11 and 16 Panktiḥ, 17 and 18 Bṛihatí. | 739 |
| 70 | 8.8.1 | 6.5.8 | Yo rájá | 15 | Puruhanmá (A'ngirasaḥ). | Indraḥ. | 1–6 Prágátham, 7–12 Bṛihatí, 13 Ushṇik, 14 Anushṭup, 15 Pura-ushṇik. | 747 |
| 71 | 8.8.2 | 6.5.11 | Tvam no agne | 15 | Sudítiḥ and Purumílhaḥ, or either. | Agniḥ. | 1–9 Gáyatrí, 10–15 Prágátham. | 753 |
| 72 | 8.8.3 | 6.5.14 | Havish kṛiṇudhvam | 18 | Haryataḥ, son of Pragáthaḥ. | Agniḥ, or Havishám stutiḥ. | Gáyatrí. | 759 |
| 73 | 8.8.4 | 6.5.17 | Ud íráthám | 18 | Gopavana A'treyaḥ, or Saptavadhriḥ. | Aśvinau. | Gáyatrí. | 765 |

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 74 | 8.8.5 | 6.5.21 | Viśo viśo | 15 | Gopavanaḥ. | Agniḥ, 13-15 Dánastutiḥ (king Śrutarvá). | 1,4,7 and 10 Anushṭup, 2, 3, 5, 6, 8, 9, 11 and 12 Gáyatrí, 13–15 Anushṭup. | 770 |
| 75 | 8.8.6 | 6.5.24 | Yukshvá hi | 16 | Virúpa Áṅgirasaḥ. | Agniḥ. | Gáyatrí. | 775 |
| 76 | 8.8.7 | 6.5.27 | Imam nu | 12 | Kurusutiḥ Káṇvaḥ. | The same. | The same. | 779 |
| 77 | 8.8.8 | 6.5.29 | Jajnánaḥ | 11 | The same. | Indraḥ. | 1–9 Gáyatrí, 10 Bṛihatí, 11 Satobṛihatí. | 783 |
| 78 | 8.8.9 | 6.5.31 | Puroḷáśam | 10 | ...... | The same. | 1–9 Gáyatrí, 10 Bṛihatí. | 787 |
| 79 | 8.8.10 | 6.5.33 | Ayam kṛitnuḥ | 9 | Kṛitnur Bhárgavaḥ. | Somaḥ. | 1–8 Gáyatrí, 9 Anushṭup. | 790 |
| 80 | 8.8.11 | 6.5.35 | Na hy anyam | 10 | Ekadyúḥ, son of Nodhás. | 1–9 Indraḥ, 10 Deváḥ. | 1–9 Gáyatrí, 10 Trishṭup. | 792 |
| 81 | 8.9.1 | 6.5.37–38 | Á tú naḥ | 9 | Kusídí, son of Kaṇvaḥ. | Indraḥ. | Gáyatrí. | 796 |
| 82 | 8.9.2 | 6.6.1 | Á pra drava | 9 | The same. | The same. | The same. | 799 |
| 83 | 8.9.3 | 6.6.3 | Devánám | 9 | ...... | Viśve Deváḥ. | ...... | 802 |
| 84 | 8.9.4 | 6.6.5 | Preshṭham | 9 | Uśanás, son of Kaviḥ. | Agniḥ. | ...... | 805 |
| 85 | 8.9.5 | 6.6.7 | Á me havam | 9 | Kṛishṇa Áṅgirasaḥ. | Aśvinau. | ...... | 808 |
| 86 | 8.9.6 | 6.6.9 | Ubhá hi | 5 | Viśvakaḥ, son of Kṛishṇaḥ. | The same. | Jagatí. | 811 |
| 87 | 8.9.7 | 6.6.10 | Dyumní vám | 6 | Dyumníkaḥ, son of Vasishṭhaḥ, or Priyamedha Áṅgirasaḥ, or Kṛishṇaḥ. | ...... | Prágátham. | 814 |
| 88 | 8.9.8 | 6.6.11 | Tam vo dasmam | 6 | Nodhá Gautamaḥ. | Indraḥ. | The same. | 817 |
| 89 | 8.9.9 | 6.6.12 | Bṛihad indráya | 7 | Nṛimedhaḥ and Purumedhaḥ (Áṅgirasau). | The same. | 1–4 Prágátham, 5 and 6 Anushṭup, 7 Bṛihatí. | 820 |
| 90 | 8.9.10 | 6.6.13 | Á no viśvásu | 6 | The same. | ...... | Prágátham. | 824 |
| 91 | 8.9.11 | 6.6.14 | Kanyá váḥ | 7 | Apálá, daughter of Atriḥ. | ...... | 1 and 2 Panktiḥ, 3–7 Anushṭup. | 827 |
| 92 | 8.9.12 | 6.6.15 | Pántam á | 33 | Śrutakakshaḥ or Sukakshaḥ. | ...... | 1 Anushṭup, 2–33 Gáyatrí. | 832 |
| 93 | 8.9.13 | 6.6.21 | Ud ghet | 34 | Sukakshaḥ. | 1–33 Indraḥ, 34 Indraḥ and Ribhavaḥ. | The same. | 843 |
| 94 | 8.10.1 | 6.6.28 | Gaur dhayati | 12 | Vinduḥ (Áṅgirasaḥ) or Pútadakshaḥ. | Marutaḥ. | Gáyatrí. | 856 |
| 95 | 8.10.2 | 6.6.30 | Á tvá | 9 | Tiraścíḥ (Áṅgirasaḥ). | Indraḥ. | Anushṭup. | 859 |
| 96 | 8.10.3 | 6.6.32 | Asmai | 21 | Dyutánaḥ, son of the Maruts, or Tiraścíḥ. | Indraḥ, 14*d* Marutaḥ, 15 Indraḥ and Bṛihaspatiḥ. | 1–3, 5–21 Trishṭup, 4 Viráṭ. | 864 |

| Hymn. | Mandala Anuvaka Sukta. | Ashtaka Adhyaya Varga. | Beginning of the hymn. | Number of Verses. | Author. | Deity. | Metre. | Pag. |
|---|---|---|---|---|---|---|---|---|
| 97 | 8.10.4 | 6.6.36–38 | Yá indra | 15 | Rebhaḥ Kásyapaḥ. | Indraḥ. | 1–9 Bṛihatí, 10 Atijagatí, 11 and 12 Uparishṭádbṛihatí, 13 Atijagatí, 14 Trishṭup, 15 Jagatí. | 876 |
| 98 | 8.10.5 | 6.7.1 | Indráya | 12 | Nṛimedha Ángirasaḥ. | The same. | 1–6, 8 Ushṇik, 7, 10 and 11 Kakup, 9 and 12 Puraushṇik. | 884 |
| 99 | 8.10.6 | 6.7.3 | Tvám idá | 8 | The same. | ...... | Prágátham. | 889 |
| 100 | 8.10.7 | 6.7.4 | Ayam te | 12 | Nemaḥ, of the family of Bhṛiguḥ, 4 and 5 Indraḥ. | Indraḥ, 10 and 11 Vák. | 1–5, 10–12 Trishṭup, 6 Jagatí, 7–9 Anushṭup. | 892 |
| 101 | 8.10.8 | 6.7.6 | Ṛidhak | 16 | Jamadagniḥ, of the family of Bhṛiguḥ. | 1–5*c* Mitrávaruṇau, 5*d* and 6 Ádityáḥ, 7 and 8 Asvinau, 9 and 10 Váyuḥ, 11 and 12 Súryaḥ, 13 Ushás, or Súryaprabhá, 14 Pavamánaḥ, 15 and 16 Gauḥ. | 1 and 2 Prágátham, 3 Gáyatrí, 4 Satobṛihatí, 5–12 Prágátham, 13 Bṛihatí, 14–16 Trishṭup. | 898 |
| 102 | 8.10.9 | 6.7.9 | Tvam agne | 22 | Prayogaḥ, of the family of Bhṛiguḥ, or Agnir Bárhaspatyaḥ (Pávakaḥ), or the two Agnis, the sons of Sahás, called Gṛihapatiḥ and Yavishṭhaḥ, or either of them. | Agniḥ. | Gáyatrí. | 905 |
| 103 | 8.10.10 | 6.7.13 | Adarsi | 14 | Sobhariḥ Káṇvaḥ. | Agniḥ, 14 Agniḥ and the Marutaḥ. | 1–4 Bṛihatí, 3 Virádrúpá, 7, 9, 11 and 13 Satobṛihatí, 8 and 12 Kakup, 10 Hrasíyasí (Gáyatrí), 14 Anushṭup. | 911 |

# CORRECTIONS.

## VOL. I.

Page 228, line 24, read श्रीम्॒ — 588, 18. जामिः सिं° — 893, 18. जिघ्नश्ये.

## VOL. II.

Page 7, line 15. शर्धःऽतरः — 10, 25. सूरः — 13, 24. जरस्व — 16, 26. आचरंती — 57, 22. शूरः — 574, 15. गृ° सू° ४.९. — 967, 23. प्र — 985, 24. ४८.

## VOL. III.

Page 45, line 22. अरूपितं — 271, 3. कदाँ — 831, 9 and 11. दूत्यां.

## VOL. IV.

Preface, p. xviii, l. 20. increase, l. 21. decrease; *ends* instead of *begins.* — xxxii, 34. Linga.

Page 17, line 16. द्यामधि — 23, 7. मघव — 24, 20. हरयः — 26, 2. एभिर्न — 30, 17. गायत्रं instead of त्रैष्टुभं — 47, 23. नाधितासो — 65, 18. मध्येर्ध — 88, 20. विप्राः — 98, 5. पंचदशं — 101, 18. वैश्वदेवी instead of वैश्वानरी — 109, 11. पंचम्याद्या — 146, 10. गोपा — 147, 5. वां — 155, 17. उत्ऽचरत् — 171, 9. एकोन° — 175, 6, 8, 11. अबुध्रन् — 178, 14. प्रागाथं — 199, 23. मायिनो — 202, 4. शृणुतं, 6. शृणुतं — 203, 10. तमैंद्रावरूणं — 222, 18. एकोन° — 229, 5. पीवोअन्नाँ र° — 251, 1. नवमं instead of दशमं; the same in hymns 99, 100, and 101. — 252, 15. शाशदानान् — 252, 22. केवलः — 259, 18. °मस्य — 273, 23. भूद्यो — 285, 18. छेदं — 290, 13. एणं — 346, 23. नों — 383, 23. विपन्यू — 390, 8. जगत्ऽपो — 391, 21. छर्दिर्व° — 395, 2. हुवे — 409, 13. वोऽवंस — 453, 16. सोभरिराग्नेयं — 467, 15. भुवद्व° — 467, 20. सोभरेः; the same in p. 478, 14, and p. 486, 24. — 474, 19. अतंष्वि° — 477, 17. वोचत — 481, 17. ते — 486, 25. एकादशी द्वादशी च — 510, 5. विंदामि — 533, 9. यज्ञेभिरावृतो — 578, 8. सहस्र — 739, 23. इदिहे — 747, 18. त्रयोदश्युष्णिक् चतुर्दश्यनुष्टुप् पंचदशी पुरउष्णिग° — 770, 4. पंचमं instead of चतुर्थं, and so on to hymn 10. — 782, 24. एकादशं — 783, 1. कुरु° — 864, 12. अध द्रप्स — 884, 17. पुर उष्णिगि.